ते कुलद्वयम् ॥ ५ ॥ सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयानघे ।
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता ॥ ६ ॥ भाविन्यर्थे हि
सत्स्त्रीणां वैकृतं नोपजायते । गुरुधर्माभिगुप्ता च श्रेयः क्षिप्र-
मवाप्स्यसि ॥ ७ ॥ सहदेवश्च मे पुत्रः सदावेक्ष्यो वने वसन् ।
यथेदं व्यसनं प्राप्य नायं सीदेन्महामतिः ॥ ८ ॥ तथेत्युक्त्वा तु
सा देवी स्रवन्नेत्रजलाविला । शोणिताक्तैकवसना मुक्तकेशी
विनिर्ययौ ॥ ९ ॥ तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीम् ।
अथापश्यत् सुतान् सर्वान् हृताभरणवाससः ॥ १० ॥ रुरुचर्मा-
वृततनून् ह्रिया किञ्चिदवाङ्मुखान् । परैः परीतान् संहृष्टैः
सुहृद्भिश्चानुशोचितान् ॥ ११ ॥ तदवस्थान् सुतान् सर्वानुपसृत्या-
तिवत्सला । स्वजमानावदच्छोकात्तत्तद्विलपती बहु ॥ १२ ॥

कुन्त्युवाच । कथं सद्धर्मचारित्रान् वृत्तस्थितिविभूषितान् ।
अक्षुद्रान् दृढभक्तांश्च दैवतेज्यापरान् सदा ॥ १३ ॥ व्यसनं वः
समभ्यागात् कोऽयं विधिविपर्य्ययः । कु
पश्यामि वो धिया ॥ १४ ॥ स्यात्तु
मजीजनम् । दुःखायासभुजो
कथं वेत्स्यथ दुर्गेषु वने वृ
तेजोभिरकृशाः कृशाः

किं नु प्रमादकृतः । ममाल्पो नैव विहितस्तेनायुर्न जहाति माम
॥ २२ ॥ हा कृष्ण द्वारकावासिन् क्वासि सङ्कर्षणानुज । कस्मान्न
त्रायसे दुःखान्मां चेमांश्च नरोत्तमान् ॥ २३ ॥ अनादिनिधनं ये
त्वामनुध्यायन्ति वै नराः । तांस्त्वं पासीत्ययं वादः स गतो
व्यर्थतां कथम् ॥ २४ ॥ इमे सद्धर्ममाहात्म्ययशोवीर्य्यानुवर्त्तिनः ।
नार्हन्ति व्यसनं भोक्तुं नन्वेषां क्रियतां दया ॥ २५ ॥ सेयं
नीत्यर्थविज्ञेषु भीष्मद्रोणकृपादिषु । स्थितेषु कुलनाथेषु कथ-
मापदुपागता ॥ २६ ॥ हा पाण्डो हा महाराज क्वासि किं समु-
पेक्षसे । पुत्रान् विवास्यतः साधूनरिभिर्द्यूतनिर्ज्जितान् ॥ २७ ॥
सहदेव निवर्त्तस्व ननु त्वमसि मे प्रियः । शरीरादपि माद्रेय
मा मा त्याक्षीः कुपुत्रवत् ॥ २८ ॥ व्रजन्तु भ्रातरस्तेऽमी यदि
सत्याभिसन्धिनः । मत्परित्राणजं धर्ममिहैव त्वमवाप्नुहि ॥ २९ ॥
वैशम्पायन उवाच । एवं विलपतीं कुन्तीमभिवाद्य प्रणम्य
...न्ता वनायैव प्रवव्रजुः ॥ ३० ॥ विदुरस्यापि
...भिः । प्राविशयद्गृहं क्षत्ता स्वय-
...राष्ट्रस्त्रियस्ताश्च निखिलेनोप-
...तमण्डले ॥ ३२ ॥ रुरुदुः-
दध्युश्च सुचिरं कालं